तादृशफलान्वयः। तेन चैत्रवृत्तिकृतिजन्यपाकजन्यवर्तमानफलाश्रयाभिन्नैकत्ववान् तण्डुल इति महावाक्यार्थः। एवं घटमानयतीत्यत्र घटपदेन घटोपस्थितिः। द्वितीयया कर्मतोपस्थितिः। कर्मता च उत्तरदेशसंयोगरूपा। वृत्तित्वं संसर्गः। तेन घटवृत्तिकर्मत्वमितिबोधः। आङ्पूर्वणीधातुना आनयनोपस्थितिः। अनुकूलता संसर्गः। तेन घटवृत्तिकर्मतानुकूलमानयनमिति बोधः। तत आख्यातेन कृत्युपस्थितिः। अनुकूलतासंसर्गेण तादृशानयनस्य कृतावन्वयः। तेन तादृशानयनानुकूलकृतिरिति बोधः। ततश्चैत्रपदेन चैत्रोपस्थितिः। तत्राश्रयतासम्बन्धेन तादृशकृतेरन्वयः। तेन घटवृत्तिकर्मतानुकूलानयनानुकूलकृतिमान् चैत्र इति महावाक्यार्थबोधः।

एवं करोतीत्यत्र कृधातुना कृत्युपस्थितिः। आख्यातेन लक्षणया आश्रयत्वोपस्थितिः, तत्राश्रयतासंसर्गेण कृत्याश्रय इति शाब्दबोधः। एवं द्वेष्टि-जानातीच्छतियजत इत्यादौ बोध्यम्। यजत इति यजधातोर्देवतोद्देश्यकद्रव्यत्यागरूपार्थत्वात् त्यागस्य च इच्छारूपत्वात् सविषयकधातूदाहरणे तदुदाहृतम्।

एवं रथो गच्छतीत्यत्र गम्धातुना उत्तरदेशसंयोगानुकूलव्यापारोपस्थितिः। आख्यातेन लक्षणया आश्रयत्वोपस्थितिः। तदुपरि आश्रयत्वं संसर्गः। तेन उत्तरदेशसंयोगानुकूलव्यापाराश्रयत्वाश्रयो रथ (इति) बोधः। त्यजतीत्यत्र त्यज्धातुना पूर्वदेशविभागानुकूलक्रियोपस्थितिः। आख्यातेन कृत्युपस्थितिः। आश्रयत्वं संसर्गः। तेन पूर्वदेशविभागानुकूलकृत्याश्रय इति बोधः। एवं पततीत्यत्र पत्धातुना अधःसंयोगानुकूलक्रियोपस्थितिः। आख्यातेन कृत्युपस्थितिः। आश्रयत्वं संसर्गः। तेन अधःसंयोगानुकूलक्रियानुकूलकृत्याश्रय इति बोधः। एवं नश्यतीत्यत्र नश्धातुना नाशोपस्थितिः। आख्यातेन लक्षणया प्रतियोगित्वोपस्थितिः। आश्रयत्वं संसर्गः। तेन नाशप्रतियोगित्वाश्रय इति बोधः। एवं विद्यत इत्यत्र विद्धातुना सत्तोपस्थितिः। आख्यातेन लक्षणया चाश्रयत्वोपस्थितिः। आश्रयत्वं संसर्गः। तेन सत्ताश्रयत्वाश्रय इति बोधः। एवं निद्रातीत्यत्र निपूर्वद्राधातुना मिथ्यामनःसंयोगोपस्थितिः। आख्यातेन कृत्युपस्थितिः। आश्रयत्वं संसर्गः। तेन मिथ्यामनःसंयोगानुकूलकृत्याश्रय इति बोधः।

एवं चैत्रो मैत्रं तण्डुलं पाचयतीत्यत्र मैत्रपदोत्तरद्वितीयया वृत्तित्वम्। तण्डुलपदोत्तरद्वितीयया फलम्। णिजन्तपच्धातुना पाकानुकूलव्यापारः। आख्यातेन तदनुकूलकृतिः। तेन तण्डुलवृत्तिकर्मतानुकूलमैत्रवृत्तिपाकानुकूलव्यापारानुकूलकृतिमान् चैत्र इति बोधः। यदा चैत्रो मैत्रेण तण्डुलं पाचयतीति प्रयोगः तदापि पूर्ववदन्वयः। मैत्रस्य स्वव्यापारापेक्षया कर्तृत्वम्। चैत्रस्य व्यापारापेक्षया कर्मत्वम्। अतो द्वितीयातृतीययोर्वैकल्पिकत्वं बोध्यम्। एवं चैत्रेण मैत्रस्तण्डल पाच्यत इत्यत्र चैत्रवृत्तिव्यापारजन्यतण्डुलवृत्तिकर्मतानुकुलव्यापाराश्रयो मैत्र इति बोधः। वृत्तित्वं संसर्गः। तृतीयया व्यापारो बोध्यते। पच्धातुना पाकानुकूलव्यापारो बोध्यते। कर्माख्यातेनाश्रयत्वं द्वितीयया कर्मत्वं च बोध्यते। एवं पिपठिषतीत्यत्र पठ्धातुना पाठोपस्थितिः। सन् प्रत्ययेन इच्छोपस्थितिः। विषयिता संसर्गः। आख्यातेन लक्षणया आश्रयत्वोपस्थितिः। तदुपरि आश्रयत्वं संसर्गः। तेन पाठविषयकेच्छाश्रयत्वाश्रय इतिबोधः। एवं देवदत्तेन शास्त्रं पिपठिष्यत इत्यत्र देवदत्तपदोत्तरतृतीयया वृत्तित्वम्। निरूपकत्वसंसर्गेण तादृशदेवदत्तस्य वृत्तित्वेऽन्वयः। तेन देवदत्तावृत्तीच्छाविषयपाठजन्यफलशालिशास्त्रमिति बोधः।

अथ कर्तृविहित-कृत्प्रत्ययस्य कृत्याश्रये शक्तिः। तेनान्नस्य पक्ता इत्यत्र षष्ठयां द्वितीयायाः प्रतिरूपकत्वात् कर्मत्वम्। पच्धातुना पाकः। तृचा कृत्याश्रयो बोध्यते। अभेदः संसर्गः। तेनान्नकर्मकपाकानुकूलकृत्याश्रयाभिन्नश्चैत्र इति बोधः। एवम् अन्नस्य पाचक इत्यत्र ण्वुलप्रत्ययेन कृत्याश्रयो बोध्यते।

अथ भावकर्मविहितकृत्प्रत्ययस्य भावकर्मणोः शक्तिः। तेन चैत्रेण पक्वमन्नमित्यत्र चैत्रपदोत्तरतृतीयया कृत्युपस्थितिः। पचधातुना पाकोपस्थितिः। जन्यत्वं संसर्गः। अभेदः संसर्गः। तेन चैत्रवृत्तिकृतिपाकजन्यफलशाल्यभिन्नमन्नमिति बोधः। भावस्थले चैत्रेण पक्व जन्यमित्यत्र चैत्रवृत्तिकृतिजन्यः पाक इति बोध्यम्। भावकृद्घञादीनां प्रयोगसाधुतामात्रम्। द्विवचनादिकं तु कृदभिहितो भावो द्रव्यवद् प्रकाशते इति न्यायाच्च। एवमेध आहर्तुं व्रजतीत्यत्र एध पदेन काष्ठोपस्थितिः। द्वितीयया कर्मत्वोपस्थितिः। तुमुना प्रकृतक्रियानिष्ठ-

क्रियान्तरनिमित्तोपस्थितिः। व्रज्धातुना गमनोपस्थितिः। आख्यातेन कृत्युपस्थितिः। आश्रयत्वं संसर्गः। तेन एधोवृत्तिकर्मतानुकूलाहरणोद्देशकव्रजनानुकूलकृत्याश्रयश्चैत्र इति बोधः।

## अथ द्विकर्मकविचारः

अजां ग्रामं नयतीत्यत्र अजावृत्तिकर्मतानुकूला या ग्रामविषयिणी प्राप्तिः तदनुकूलकृत्याश्रय इति बोधः। एवं नीयतेऽजा ग्रामं पथिकेनेत्यत्र पथिकनिष्ठकृतिजन्या या ग्रामविषयिणी प्राप्तिः तज्जन्यफलशालिनी इति बोधः।

एवं गां दोग्धि पयो गोपालकः इत्यत्र गोसम्बन्धिपयोवृत्तिकर्मतानुकूलदोहनानुकूलकृत्तिमानित्यन्वयः। एवं दुह्यते गौः क्षीरं गोपालकेनेत्यत्र गोपालकनिष्ठकृतिजन्यक्षीरकर्मकदोहननिमित्तं गौरित्यन्वयबोधः। प्रकृते कर्माख्यातेनाप्रधानकर्मणो गवादेर्बोधजननादित्यकथितं कर्मेत्युक्तम्। कर्मत्वातिदेशस्तु द्वितीयाभावार्थो न तु साक्षात्कर्मेत्यर्थः। एवं चैत्रस्य पाकः, अद्भुतः समुद्रस्य बन्धो वानरैरित्यादौ चैत्रभिष्ठकृतिजन्यः पाकः, एवं वानरीयकृतिजन्यसमुद्रविषयकबन्धमद्भुतमित्यन्वयः।

क्वचित् तृतीयाप्रतिकृतिराकृतिरित्यर्थः। क्वचिद्द्वितीया-प्रतिनिधित्वात्कर्मत्वमर्थः। एवमधीती व्याकरणे, पठिती शास्त्रेइत्यादौ व्याकरणमधीतवान्, शास्त्रं पठितवानित्यन्वयबोधः। क्तस्येन्विषयस्य कर्मणीत्यनेन सप्तम्या द्वितीयाप्रतिनिधित्वात्। क्तान्तादधीतशब्दात् 'क्तस्येन्'–इत्यनेन इनिप्रत्ययविधानात्।

एवं चर्मणि द्विपिनं हन्ति, दन्तयोर्हन्ति कुञ्जरं, बालेषु चमरीं हन्ति, सीम्नि पुष्कलको हतः।'' इत्यादौ निमित्तात्कर्मसयोग इति निमित्ते सप्तमी। निमित्तात् उद्देश्यान्तरवाचकपदात् इत्यर्थः, तथा च यदा निमित्ताकर्मणो रवयवावयवित्वं सम्बन्धश्च तदा निमित्तावाचकपदात् सप्तमी भवति। तेन चर्मोद्देश्यकं यत्व्याघ्रकर्मकहननं तदनुकूलकृतिमान् इति अन्वयबोधः। एवम् अन्यत्रापि बोध्यम्। 'पुष्फलको गन्धमृगः' सिम्नि = अण्डकोषे।

सत्सप्तम्या सामानाधिकरण्यमर्थः। तच्च क्वचित् कालिकं क्वचित् दैशिकं च। गोषु दुह्यमानासु गतः, दुग्धासु गतः इत्यादौ समानकालिकत्वं भाषते। तेन गोविषयकवर्तमानदोहनसमकालिकगमनानुकूलातीतकृतिमान् इत्यन्वयबोधः। दैशिकं यथा द्रव्यं गुणकर्मान्यत्वे सति सत्त्वमित्यादौ सत्त्वनिष्ठगुणकर्मणोर्भेदसमानदेशत्वं भासते। तथा च गुणकर्मप्रतियोगिको यो भेदः तत्समानदेशा सत्ता इति बोधः, द्रव्ये भेदसत्त्वयो दैशिकसामानाधिकरण्यादिति। एवं पितृव्यघाती पुत्रो जनिता, वनं गतः श्वो भविता राम इत्यादौ पितृव्यं हतवान् इत्यर्थे पितृव्यघाती, जनिष्यते इत्यर्थे जनिता च। अतः कथं भविष्यदुत्पत्तिके पुत्रे पितृव्यकर्मकं हननं साधु। कर्तृत्वसम्बन्धोऽसम्भव इत्यतो धातुसम्बन्धे प्रत्यया इति सूत्रकरणम्। तस्यायमर्थः—धात्वर्थस्यावश्यकसम्बन्धे तद्धात्वर्थसमभिव्याहृतक्रियान्तराद् भिन्नकालीना अपि प्रत्ययाः स्युः इति बोधे यथोचितकालमादाय विषयीभवति। तेन भविष्यदुत्पत्तिके पुत्रे यदवश्यं पितृव्यकर्मकहननं भासते, तत्रैवायं प्रयोगः साधुः। तेनातीतकालविहितप्रत्ययेन आवश्यकत्वं भासते। भविष्यदुत्पत्तिको पुत्रोऽवश्यं पितृव्यं हनिष्यतीति बोधः। एवं परदिनोत्पत्तिप्रतियोगी रामोऽवश्यं वनं गमिष्यतीति बोधः।

## अथ कारकविचारः

तत्र कारकविचारे क्रियानिमित्तत्वं कारकत्वमिति वैयाकरणाः। कारकत्वं क्रियानिमित्तत्वम्। तच्च क्वचित् साक्षात् सम्बन्धात् क्वचित् परंपरासम्बन्धात् भिन्नम्। मैत्रस्य तण्डुलं पचति इत्यत्र सम्बन्धिनि मैत्रे कारकत्वापत्तेः। संप्रदानादेरनुमतिप्रकाशनद्वारेव तण्डुलादिसंपादनद्वारापि पाकनिमित्तत्वात्। विभक्त्यर्थद्वारा क्रियान्वयित्वं कारकत्वमिति नैयायिकलक्षणम्। अत एव नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नत्वात् द्वारीभूतविभक्त्यर्थोपस्थितेस्तत्र लक्षणत्वं कल्प्यम्। विभक्तिस्तु क्वचित् सुबात्मिका क्वचिद् तिङात्मिका इति शेषः। क्रियाविशेषणस्य कारकत्वं नास्ति। तत्र च पारिभाषिककर्मसंज्ञा। तस्य च क्रियान्वयित्वादतिव्याप्तिमाशक्याह स्तोकं पचतीत्यादौ क्रियाविशेषणेऽतिव्याप्तिवारणाय विभक्त्यर्थेति। तत्र द्वितीया पदसाधुत्वार्था। 'सम्बन्धिनः क्रियानिमित्तित्वेऽपि न

विभक्त्यर्थद्वारा क्रियान्वयित्वम्। अतो नातिव्याप्तिः। गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक्तस्य भेषजैरित्यत्र नामार्थाध्याहारः कर्तव्यः। तेन नातिव्याप्तिरिति।

## अथ कर्तृकारकलक्षणम्

क्रियानुकूलकृतिमत्त्वं कर्तृत्वम्। करणार्थककृञ् धातुव्युत्पन्नत्वात्। ततोऽन्यत्राचेतनादौ भाक्तं कर्तृत्वम् इति।

## अथ क्रियालक्षणम्

धातोरर्थः क्रिया। सा च द्विधा क्वचित् कर्तृस्था, क्वचिच् च कर्मस्था, तत्र गमिपठिप्रभृतीनां कर्तृस्थैव क्रिया। तस्याः पञ्चविधकर्मान्यतमरूपत्वात्। पचतिप्रभृतीनां कर्मस्थैव क्रिया। क्वचित् अधःसन्तापनादिरूपत्वात्, क्वचिदवयवविभागरूपत्वादिति संक्षेपः।

## अथ कर्मलक्षणम्

परसमवेतक्रियाजन्यफलशालित्वं कर्मत्वम्। कर्तृभिन्ने परसमवेतत्वे सति यत् क्रियाजन्यफलं तत्शालित्वमर्थः। परसमवेत इति **विशेषणोक्त्या** 'ग्रामं गच्छतीत्यादौ संयोगरूपफलशालित्वे **कर्तुः नातिव्याप्तिः**। अत एव फलावच्छिन्नव्यापारबोधकत्वात् **धातोः सकर्मकत्वव्यवहारः**। गच्छतीत्यत्र उत्तरदेशसंयोगफलकगमनं **गम्धात्वर्थः**। गां ददातीत्यत्र स्वस्वत्वध्वंपूर्वकपरस्वत्वोत्पत्त्यभिन्नतया **गोदानं नैव** मदीयम्, भवदिच्छारूपस्त्यागः। इदं दाधात्वर्थः। **तज्जन्यं फलं** स्वस्वत्वध्वंसपूर्वकपरकीयत्वं तत्शालित्वात् गोः **कर्मत्वम्। तण्डुलं** पचतीत्यादौ अधःसन्तापजन्यविक्लितिः फलम्। **तच्छालित्वात्** तण्डुलादेः कर्मत्वम्। अतएव यत्र कर्तृगता क्रिया तत्र लक्षणं मुख्यम्। यत्र तु कर्मगताक्रिया तत्र लक्षणं गौणम्। एवम् ओदनं पचतीत्यत्र ओदनपदेन तण्डुले लक्षणा। विक्लितिफलयोगात्।

तच्च कर्म त्रिविधम्। प्राप्यं, निर्वर्त्यं, विकार्यम्। यत् तु कर्मणो धात्वर्थजन्यफलशालित्वं तत् प्राप्यम्। गच्छति, पचति, हन्तीत्यादयः। यत् तु कृत्यादिसाध्यत्वेन विषयत्वं तन्निर्वर्त्यम्। यथा घटं करोतीत्यादयः। एवं सर्वत्र घटादिपदेन मृत्पिण्डादौ लक्षणा। तेन साक्षात्

कृतावन्वयबाधात्। एवं घटं करोति, इच्छति यजति द्वेष्टीत्येवमादिषु। यत्र तु प्रकृत्युच्छेदजनितरूपान्तरवत्त्वं तद् विकार्यम्। यथा काष्ठं भस्म करोति। दुग्धं दधिकरोति। तण्डुलानोदनं करोति। सुवर्णं कुण्डलं करोति इत्यादि। अत्र भस्मादेः कर्मत्वं, न काष्ठादेः। भस्मादिषु काष्ठसम्बन्ध्यभिन्नत्वबोधाय भस्मादिपदसमनियतविभक्तिमत्त्वं काष्ठादेः। तथा च काष्ठसम्बन्ध्यभिन्नविषयककृत्याश्रय इति बोधः। एवम् अन्यत्रापि बोध्यम्। किन्तु अजां ग्रामं नयति इत्यादिवत् द्विकर्मत्वं न। तत्र भिन्नत्वबोधात्। अजावृत्तिकर्मतानुकूला या ग्रामविषयिणी प्राप्तिस्तदनुकूलकृतिमानित्यन्वयबोधः। एवञ्च गां दोग्धि पयः गोपालक इत्यत्र बोधे गोसम्बन्धित्वं पयोनिष्ठं ज्ञेयम्। एवं नीयतेऽजा ग्रामं पथिकेनेत्यत्र पथिकवृत्तिकृतिजन्या या ग्रामविषयिणी प्राप्तिस्तज्जन्यफलशालिनी अजेत्यन्वयबोधः। दुह्यते गौः पयो गोपालकेनेत्यत्र गोपालकवृत्तिकृतिजन्यदोहनजनितफलशालिनी पयोनिमित्ता गोरित्यन्वयबोधः। तथा त्रिविधकर्मकारकमध्ये प्राप्यं कर्म मुख्यम्। निर्वर्त्यं विकार्यञ्च गौणमिति संक्षेपः।

### अथ करणलक्षणम्

साधकतमं करणमिति सूत्रम्। तत्र साधकतमत्त्वं कारकान्तरासहकृतत्वे सति फलहेतुत्वम्। कारकान्तरव्यापारमनुत्पाद्य फलहेतुत्वमित्यर्थः। फलं धात्वर्थतावच्छेदकम्। दात्रेण धान्यं छिन्नतीत्यादौ तृतीयायाः करणत्वमर्थः। एवं मनसा पाटलीपुत्रं गच्छतीत्यत्र। अथ धनेन कुलम्, विद्यया यशः इत्यादौ तृतीयायाः हेतुत्वमर्थः। क्रियान्वयित्वाभावात्। एवं धूमादग्निमान्, कृतकत्वादनित्यतावान्। पञ्चम्या ज्ञाप्यत्वमर्थः। तथा च धूमज्ञानज्ञाप्यवह्निमदभिन्नः पर्वत इति कार्यत्वज्ञानज्ञाप्यानित्यत्ववदभिन्न इति बोधः। कृतकत्वं कार्यत्वम्।

### अथ सम्प्रदानलक्षणम्

कर्मणा यमभिप्रैति स सम्प्रदानमिति सूत्रम्। करणीभूतकर्मजन्यफलभागित्वेन उद्देश्यत्वं सम्प्रदानत्वम्। करणीभूतं तत्क्रियायाः करणीभूतम् इत्यर्थः। दाधातोः स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नद्रव्यत्यागोऽथवा उद्देश्यगतस्वामित्वसम्पादकत्यागोऽर्थः।

तेन विप्राय गां ददातीत्यत्र विप्रोद्देशकं यद् गोवृत्तिस्वत्वं गोनिरूपितस्वामित्वं वा तज्जनको यस्त्यागः तदाश्रय इति बोधः। नारदाय रोचते कलह इत्यत्र चतुर्थ्याःसम्बन्धत्वमर्थः, तत्र रुच्यर्थानां प्रीयमाणः इति सूत्रम्। तत्र नारदसम्बन्धिनी या रुचिस्तद्विषयः कलह इत्यर्थः। नृपाय श्लाघते वली इत्यत्र चतुर्थ्याः विषयत्वमर्थः। तत्र "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः इति सूत्रम्। ज्ञीप्स्यमानः आत्मज्ञापनेच्छाविषयीभूतः। नृपविषयकात्मज्ञापनेच्छाविषयीभूतकथनाश्रयोवली इति बोधः। विप्राय शतं धारयति शूद्र इत्यत्र चतुर्थ्याः सम्बन्धित्वमर्थः। तत्र धारेरूत्तमर्ण इति सूत्रम्। तथा च विप्रसम्बन्धिशतसंख्याविशिष्टद्रव्यकर्मक यद् ऋणग्रहणं तदाश्रयः शूद्र इति बोधः। देवदत्ताय क्रुध्यति इत्यत्र चतुर्थ्याः कर्मत्वमर्थः। अत्र "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" इति सूत्रम्। तथा च देवदत्तकर्मकक्रोधाश्रय इति बोधः। क्रोधः परविषयकासूयाजनकव्यापारः। द्रोहोऽनिष्टाचरणम्। ईर्ष्या अक्षमा। असूया द्वेषः। पुष्पायस्पृहयतीत्यत्र चतुर्थ्या ईप्सितकर्मत्वमित्यर्थः। तत्र स्पृहेरीप्सित इति सूत्रम्। तथा पुष्पविषयक-स्पृहाश्रय इति बोधः।

## अपादानलक्षणम्

तत्र ध्रुवमपायेऽपादानमिति सूत्रम्। अपाये विभागजनकभूतक्रियाया यद् ध्रुवं तत्क्रियारहितं यत्कारकं (तदपादानं) भवतीत्यर्थः। पतनक्रियाजन्यविभागाश्रयत्वम् अपादानत्वम् इति नैयायिकाः। तदपादानं द्विविधम्। चलमचलं चेति। यथा वृक्षात् पततीत्यत्र वृक्षरूपमपादानम् अचलम्। धावतोऽश्वात्पतितोऽश्ववाहकः इत्यत्राश्वरूपमपादानं चलम्। तत्र पञ्चम्या अपादानत्वमर्थः। अपादानत्वमवधित्वम्। तेन वृक्षावधिकाधःसंयोगानुकूला या क्रियातद्वद् पर्णमिति बोधः। एवमश्वाबधिकाधःसयोगानुकूलायाक्रिया तद्वानश्ववाहक इति बोधः। ननु कथमश्वस्यापादानत्वं, पुरुषाश्वयोः विभागं प्रति अश्वक्रियायाः हेतुत्वादिति चेन्न, अश्वक्रियानोभयविभागहेतुः विभागजनकीभूतपुरूषक्रियां प्रति अश्वक्रियाया हेतुत्वात्। हिमवतो गगा प्रभवति, वल्मीकात् प्रभवति धनुरित्यत्र 'भुवः प्रभव' इति सूत्रम्। प्रभव आद्यप्रकृतिः। तेन हिमवत्त्वावच्छिन्नाद्यप्रकृतिकोत्पत्तिमती

गंगा इति बोधः। एवम् अन्यत्रापि। सामग्रीतः फलं जायते इत्यादौ पञ्चम्या हेतुत्वमर्थः। तत्र 'जनिकर्त्तुः प्रकृतिः' इति सूत्रम्। प्रकृतिः फलोत्पत्त्युन्मुखीभूतकारणकलापः। तेन सामग्रीहेतुकोत्पत्तिमत् फलम् इति बोधः। अध्ययनात् पराजयते छात्रः इत्यादौ पञ्चम्या विषयत्वम् अर्थः। तत्र पराजेरसोढ़ः' इति सूत्रम्। परापूर्वकजिधातोः असोढ़ार्थोऽपादानं भवतीत्यर्थः। अत्रासोढ़त्वम् असाध्यत्वम्। पराजयो निवृत्तिः। तेनाध्ययनविषयकनिवृत्तिमान्छात्र इति बोधः। शत्रून् पराजयत इत्यत्र पराजयः पराभवः, शत्रुस्तु पराभवविषय इति न पञ्चमी। कूपादन्धं वारयतीत्यत्रापि अवधित्वमर्थः। तत्र वारणार्थकधातुप्रयोगे ईप्सितमपादानं भवतीत्यर्थः। कूपोऽपि पुरोगस्यदेशत्वेनेप्सितो भवति। तेन कूपावधिकं यन्निवारणं तदनुकूलव्यापारवानिति बोधः। तत्र कूपस्य ध्रुवत्वम्। अन्धकूपयोः संयोगवारणात्। चौराद् विभेति, व्याघ्रादपत्रस्तः, दस्युभ्यो रक्षित इत्यत्र पञ्चम्या हेतुत्वमर्थः। अत्र भीत्रार्थानां भयहेतुरिति सूत्रम्। भयार्थकधातुप्रयोगे त्राणार्थकधातुप्रयोगे वा योहेतुस्तदपादानं भवतीत्यर्थः। तद्हेतोर्यदपादनत्वमुक्तं तत् तृतीयावारणार्थमेव। चौरहेतुकभयाश्रय इति बोधः। भयं भाविदुःखविषयकज्ञानम्। त्राणं दुःखजनकसामग्रीतो मोक्षणम्। तत्राद्यप्रयोगद्वयं भयार्थकं, तृतीयं त्राणार्थकमेव। उपाध्यायादन्तर्धत्ते छात्र इति उपाध्यायान्निलीयते इत्यादावपि पञ्चम्या हेतुत्वमर्थः। तत्राप्यपादानं तृतीयावारणार्थकमेव, 'अन्तर्धौ येनादर्शनमिच्छति' इति सूत्रम्। अन्तर्धौ येन हेतुना स्वादर्शनमिच्छति तदपादानं भवतीत्यर्थः। अन्तर्द्धिरात्मगोपनेच्छा। उपाध्यायहेतुकं यदात्मसंगोपनं तद्विषयणी या इच्छा तदाश्रयच्छात्र इति बोधः। उपाध्यायादधीते इत्यत्र पञ्चम्या हेतुत्वमर्थः। तत्राख्यातोपयोग इति सूत्रम्। नियमात् विद्याग्रहणे आख्यातापादानं भवतीत्यर्थः। तत्राप्यपादानत्वविधानं तृतीयावारणार्थमेव। आख्याता वक्ता। तेन उपाध्यायहेतुकं यन्नियमपूर्वकविद्याग्रहणं तदनुकूलकृतिमानिति अन्वयबोधः।

अथाधिकरणलक्षणम्-

तत्राधारोऽधिकरणम् इति पाणिनिसूत्रम्। आधार आश्रयः। कर्तृकर्मान्यतरद्वारा क्रियान्वयित्वे सति क्रियोपकारकत्वम् अधिकर-

णत्वमिति नैयायिकलक्षणम्। अन्यतरद्वारा कर्तृद्वारा कर्मद्वारा वेति अर्थः। उपकारकत्वं निष्पादकत्वम्। तेन गृहे स्थित्वा स्थाल्यामोदनं पचतीत्यत्र सप्तम्या अधिकरणत्वमर्थः। अतः कर्तृकर्मप्रभृतीनाम् अतिव्याप्तिवारणाय कर्तृकर्मान्यतरेति। गृहस्य पाकक्रियाश्रयत्वं तदुपकारकत्वञ्च कर्तृद्वारा, स्थाल्याश्च ओदनरूपकर्मद्वारा क्रियाश्रयत्वम्, तदुपकारकत्वं चेतिबोधः। गृहस्यतु स्थितिक्रियापेक्षयैवेति निष्कर्षः।

**अथ समासपदम्—**

तत्र समासत्वमखण्डोपाधिविशेषः, न तु कर्मधारयाद्यन्यतमत्वम्। अन्योन्याश्रयात्। नैयायिकमते समासे नैव शक्तिः। न वा लक्षणा। शक्तिलक्षणान्यतरसम्बन्धस्तु पदनिष्ठ एव। तत्तदर्थावगतिस्तु क्वचित् पूर्वपदे क्वचिदुत्तरपदे क्वचिदुभयपदे लक्षणयेति। समासकरणं च पदसंस्कारार्थम् इति बोध्यम्। न तु व्यासकालिक-तत्तद्पदार्थोपस्थितेः क्लृप्तत्वात् शक्तिलक्षणान्यतरसम्बन्धेन समासकालेऽपि तज्जातीयवाक्यार्थबोधानुकूलतत्तद्पदार्थोपस्थितेर्हेतुत्वं कल्प्यम्, लाघवात्। न तु व्यासपदत्वम्। तत्पदस्य वाक्यार्थबोधानुकूलेतरवाक्यत्वादिति। अतिरिक्तापि शक्तिः न कल्प्या, गौरवात्। न तु नित्यसमासस्थले पंकजादिपदे का गतिः? तत्र व्यासाभावेन क्लृप्तशक्तिकपदाभावादिति चेन्न तत्रोभयोः समाधानसाम्याद्। तथाहि समुदायशक्त्यनुरोधात् समुदायस्यपदत्वम्। अस्माभिरवयवशक्त्यनुरोधात् पदैकदेशत्वस्यापि पदत्वं कल्पनीयमिति। अतएव यत्रोभयोः समोदोषः परिहारोऽपि तत्समः इति प्रवादोऽपि साधुरिति।

समानविभक्तिमत्पदप्रकृतिकत्वे सति द्विगुभिन्नत्वे सति अभेदबोधकत्वं कर्मधारयत्वम्। तत्र नीलोत्पलम् इत्यत्र नीलपदेन नीलरूपविशिष्टं वस्तूत्पलपदेन उत्पलसामान्यमुपस्थाप्यते अभेदाख्यसंसर्गद्वारा नीलाभिन्नमुत्पलमिति शाब्दबोधः। नामार्थद्वयाभेदबोधं प्रति विरूद्धविभक्तिराहित्यस्य कारणत्वमेव। अतएव कर्मधारये न वा शक्तिः नवा लक्षणेति प्रसिद्धिः। अतएव निषादस्थपतिं याजयेदित्यत्र न षष्ठीतत्पुरुषः, न बहुव्रीहिः, पूर्वपदे परपदेवा लक्षणापत्तेः। तत्र

कर्मधारयसमासात् निषादात्मकस्थपतियाजनबोधः, न च निषादस्य संकरजातिविशेषात् याजनासम्भव इति वाच्यम्। विद्या-प्रयुक्तेस्तत्र कल्प्यत्वात्। विद्या-प्रयुक्तिस्तु निषिद्धकर्ममन्त्रपठनम्।

## अथ तत्पुरुषः–

असमानविभक्तिमत्पदप्रकृतिकत्वे सत्यभेदबोधकपदत्वं तत्पुरुषत्वम्, राजपुरुष इत्यत्र पूर्वपदेलक्षणया सम्बन्धित्वसवगम्यते। तेन राजसम्बन्ध्यभिन्नः पुरुष इति बोध। नामार्थद्वयाभेदबोधं प्रति विरुद्धविभक्तेरभावस्य तत्रोक्तत्वात्। अन्यथा पुरुषपदार्थे राजपदार्थस्य साक्षादन्वयोनस्यात्। विभक्त्यर्थाद्वारकत्वे सति निपातातिरिक्तनामार्थयोर्भेदसम्बन्धेन साक्षादन्वयस्याव्युत्पन्नत्वात्। तथा च तादृशबोधं प्रति प्रकारीभूतविभक्तिरपेक्षणीयेति बोध्यम्। न च राजपुरुष इत्यत्र पुरुषपदे राजसम्बन्धिनि लक्षणा। राजपदं तु तात्पर्यग्राहकमिति वाच्यम्। उत्तरपदार्थप्रधानस्तत्पुरुषः इति व्युत्पत्तेर्विरोधात्। पूर्वपदस्य निरर्थकत्वात्। अतएव चन्द्र इव मुखमित्यत्र इवार्थान्वयबोधे चन्द्रपदोत्तरं षष्ठीत्यज्यते। प्रथमा च साधुत्वार्था। न च दधि पश्यतिवत् लुप्तविभक्तिरनुसन्धानेनैव तादृशबोधः सुलभः इति वाच्यम्। तदनभिज्ञस्य तादृशबोधाभावादनन्वयापत्तेः। राज्ञः पुरुष इत्यत्र राजपदेन राज्ञः, षष्ठया सम्बन्धस्य, पुरुषपदेन पुरुषस्याश्रयत्वसंसर्गेणोपस्थितौ राजसम्बन्धाश्रयपुरुष इति बोधः।

## अथ द्विगुः

समानविभक्तिमत्पदप्रकृतिकत्वे सत्यभेदबोधकसंख्यापूर्वकपदत्वं द्विगुत्वम्। 'पञ्चांङ्गुलम्' इत्यादौ पञ्चानामंगुलानां समाहार इति बोधः। समाहारोऽपेक्षा-बुद्धिविषयत्वम्, तेनाङ्गुलपदेन लक्षणया पञ्चांगुलसमाहारो बोध्यते। पञ्चपदं तात्पर्यग्राहकम्।

## अथ बहुव्रीहिः–

नञ्तत्पुरुषभिन्नत्वे सति लाक्षणिकोत्तरपदकत्वं बहुव्रीहित्वम्। चित्रगुरित्यत्र गोपदं गोस्वामिनि लाक्षणिकम्। चित्रपदार्थस्यापरपदार्थैकदेशेनाभेदान्वयः। तेन चित्राभिन्नगोस्वामीत्यन्वयबोधः।

अथवा गोपदं चित्राभिन्नगोस्वामिनि लाक्षणिकम्। चित्रपदं तात्पर्यग्राहकमिति। तेन पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेनेतिव्युत्पत्तेर्न भङ्गः। नतु चित्रगुरित्यादौ विनिगमनाविरहेणोभयपदे च लक्षणा कथं नोच्यत इति चेन्न, शक्तिपदसमभिव्याहारं बिना लाक्षणिकपदस्यानुभावकत्वाऽभावात्। न च पूर्वपदे लक्षणेति वाच्यम्, उत्तरपदार्थस्य लाक्षणिकार्थे साक्षादनन्वयित्वात्। न चोत्तरपदं तात्पर्यग्राहकमिति वाच्यम्। पूर्वपदोपस्थापकत्वाभावात्। नञ्‌तत्पुरुषस्थलेषु अब्राह्मण इत्यत्र ब्राह्मणपदेन ब्राह्मणेतरे लक्षणा, नञ्‌पदं तात्पर्यग्राहकमित्यतो नञ्‌ततपुरुषभिन्नत्वे सति इति विशेषणमिति।

अथ द्वन्द्वः–

पदजन्यप्रतिपत्तिविषयबोधकत्वे सति समानविभवितसप्तकप्रकृतिकत्वं द्वन्द्वत्वम्। स च द्वन्द्वश्चार्थे। चकारार्थो भेदः। तत्र किं पदार्थभेदेथवा पदार्थतावच्छेदकभेदे शक्तिः। तत्र नाद्यः, प्रमाणप्रमेयेत्यादिगौतमन्यायसूत्रेऽप्येकदन्तहेरम्ब' इत्यादि-पर्याये नीलघटयोरभेदसत्त्वेऽपि द्वन्द्वदर्शनात्। नान्त्यः, घटा इति सरूपैकशेषे द्वन्द्वापवादके व्यभिचारात्। कथमन्यथा द्वन्द्वापवादकत्वं तस्य, उत्सर्गापवादयोः समानविषयकत्वेन नियतत्वात्। न च घटा इति सरूपैकशेषे किं प्रमाणमिति वाच्यम्। सकृदुच्चरितादिव्युत्पत्त्या चतुरादिघटोपस्थापकत्वाभावाद् तस्य। न च घटपदात् घटत्वप्रत्यासत्त्या घटमात्रोपस्थितौ तात्पर्यवशात् त्रिचतुरादिघटोपस्थितिः किं तेनेति वाच्यम्। हरय इत्यत्र तस्या अशक्यत्वकल्पनात्। नहि अत्र हरित्वमेकमस्ति। घटा इति सर्वादिसिद्धैकशेषे लोपाप्रसङ्गाच्च। अतएव वदन्ति क्वचित् पदार्थभेदे क्वचित् पदार्थतावच्छेदकभेदे द्वन्द्वस्य दर्शनादुभयभेदेऽपि शक्तिः। न चाननुगता जातिः। पदजन्यप्रतिपत्तिसमासाधिकारसामान्यभावात्।

स च द्विविधः–इतरेतरः समाहारश्च। इतरेतरस्थले साहित्यं विशेष्यत्वेन भासते। समाहारे तु विशेषणत्वेनैवेति विशेषः। साहित्यमेकक्रियान्वयित्वं तद् यथाः—'धवखदिरपलाशान् छिन्धिः' इत्यत्र धवखदिरपलाशप्रतियोगिकं यत्साहित्यं तन्निरूपितं यदवयवविभागरूपं फलं तज्जनिका या छेदनक्रिया तदनुकूलकृतिमांस्त्वम्

इति शाब्दबोधः। तन्निरूपितं समानाधिकरणम्। धवखदिरपलाशं छिन्धि इत्यत्र साहित्याश्रयावयवादिवृत्ति यत् फलं तज्जनिका या क्रिया तदनुकूलकृतिमांस्त्वमिति शाब्दबोधः, अथवा इतरेतरस्थले द्वित्व-बहुत्वप्रकारकपदार्थोपस्थितिः। समाहारे तु प्रत्येकपदार्थगतमेकत्वं भासते। न तूभयत्र साहित्यम् एकक्रियान्वयित्वरूपं भासते। न च सहभावविवक्षायां वृत्तिर्द्वन्द्वैकशेषयोरितिव्युत्पत्तेः का गतिरिति वाच्यम्। तत्रापेक्षाबुद्धिविषयत्वरूपसाहित्यावगतत्वादिति।

अथाव्ययीभावः

समासग्रस्तत्वे सति नानाविभक्तिषु एकरूपतावदव्ययत्वम् अव्ययीभावत्वम्। तत्र पूर्वपदार्थस्यैव प्राधान्यं भासते। उपकुम्भमित्यत्र कुम्भावधिकान्यदेशसंयोगीति बोधः इति संक्षेपः।

अथ निर्द्धारणम्

तत्र जातिगुणक्रियान्यतमेन समुदायादेकतमस्य पृथककरणं निर्द्धारणम्। पृथक्करणं विलक्षणधर्मवत्त्वेन, एवं यत्पदसमभिव्याहृता षष्ठी तदुपस्थाप्य-तदन्यपदार्थसमुदायेतद्धर्मवत्त्वाभावः षष्ट्या उपस्थाप्यत इति बोध्यम्। तत्र क्रमेणोदाहरणं 'नराणां क्षत्रियः शूरतमः' इति नरसामान्यमध्ये क्षत्रियत्वावच्छिन्ने नरे शूरतमत्वं। एतदन्यनरे तदभाव इत्यन्वयबोधः। एवं गवां कृष्णा सम्पन्नक्षीरतमा इति गोसामान्यमध्येकृष्णरूपवत्यां गवि सम्पन्नक्षीरतमत्वम्। न त्वन्यगवि तदभाव इति भावान्वयबोधः एवमध्वगानां रथारूढाः शीघ्रगा इत्यध्वगसामान्यमध्ये रथारूढा अध्वगाः शिघ्रगा स्तदन्याध्वगामिनि तदभाव इत्यभावान्वयबोधः।

अथ एवकारविचारः

तस्य व्यवच्छेदत्वमेव शक्यतावच्छेदकम्। व्यवच्छेदः शक्यः। विशेषस्तु क्रियासमभिव्याहृतस्यैवकारस्यात्यन्तायोगव्यवच्छेदे विशेषणसंगतैवकारस्यायोगव्यवच्छेदे विशेष्यसगतैवकारस्यान्ययोगव्यवच्छेदे च सम्बन्धेन नीलभवनात्यन्तायोगव्यवच्छेदप्रकारकसरोजविशेष्यको बोधः। एवं सति सरोजं क्वचिन्नीलं क्वचिदनीलं भवति। शंखः

पाण्डुर एवेत्यत्र अन्वयितावच्छेदकशंखत्वावच्छेदेनपाण्डुरत्वायोगव्यवच्छेदान्वयः। तथा च शंखत्वव्यापकत्वविशिष्टस्वरूपसम्बन्धेन पाण्डुरत्वाव्यवच्छेदप्रकारकशंखत्वावच्छिन्नविशेष्यको बोधः। प्रार्थ एव धनुर्धरः इत्यादौ विशेष्यसंगतैवकारस्थले धनुर्धरपदेन पकृष्टधनुर्धरे लक्षणा। पार्थँ प्रकृष्टधनुर्धरत्वं तदन्यस्मिन् तदभाव इति पार्थो धनुर्धरस्तदन्योन। अथवा धनुर्द्धरे पार्थान्यतादात्म्यव्यवच्छेदश्चेति। तथा च पार्थत्वविशिष्टविशेष्यरूपार्थत्वव्याप्यप्रकृष्टधनुर्धरत्वसमानाधिकरणविशेषणसम्बन्धेन धनुर्धरान्ययोगव्यवच्छेदप्रकारकोबोधः।

### अथ सर्वनामपदशक्तिविचारः–

तस्य शक्यं घटादिकं शक्यतावच्छेदकञ्च घटत्वादिकम्। तमानयेत्यत्र शक्तिग्रहपदार्थोपस्थितशाब्दबोधानां घटत्वादिप्रकारकत्वात्। तेषां समानप्रकारकत्वेनैव कार्यकारणभावात्बुद्धिविषयत्वेनैव तेषामनुगमः। बुद्धिविषयवृत्तित्वेनैव शक्यतावच्छेदकानां चानुगम इति शेषः। तथा च हरिपदादिवत् नानार्थमेव। तात्पर्यग्रहस्तु प्रकरणादिवशाद् पूर्वसंकेतोपस्थितिरिति नैयायिकाः। केचित्तु सर्वनामपदस्य क्वचित्प्रकान्ते क्वचित्प्रकंस्यमाने शक्तिः उभयोरनुगमकं बुद्धिविषयत्वम्। तदेवशक्यतावच्छेदकमित्याहुः।

### अथ इवशब्दविचारः–

चन्द्र इव मुखमित्यत्र चन्द्रपदं चन्द्रपरम्। इवपदं सादृश्यपरम्। प्रतियोगित्वं संसर्गः। चन्द्रस्य प्रतियोगितया सादृश्येऽन्वयः। सादृश्यमाश्रयतया मुखेऽन्वयः। तथा च चन्द्रप्रतियोगिकसादृशाश्रयं मुखमिति बोधः। चन्द्रमिवमुखं पश्यामीत्यत्र द्वितीयानुपपत्तिः चन्द्रमुखयोरभेदाभावाद्। अतएव चन्द्रपदं चन्द्रसादृशे लाक्षणिकम्। इव पदं तात्पर्यग्राहकम्। चन्द्रपदोत्तरद्वितीयाविशेषणविभक्तित्वेनाभेदबोधकत्वात् चन्द्रसादृशाभिन्नमुखमहं पश्यामीति बोधः। निपातातिरिक्तनामार्थयोर्भेदेनान्वयबोधं प्रति प्रकारीभूतविभक्त्यर्थोपस्थितेस्तत्रोक्तत्वात्। तेन इवार्थान्वयबोधो न षष्ठ्यपेक्षः। प्रथमा तु साधुत्वार्थेति निष्कर्षः।

## अथ उद्देश्यविधेयबोधविचारः—

यत्रोद्देश्यतावच्छेकविधेयतावच्छेदकयोः सामानाधिकरण्यं भासते, तत्रैबोद्देश्यविधेयबोधः। तेन घटः नीलरूपवान् इत्यत्र घटत्वनीलरूपयो सामानाधिकरण्यमवभासते। एवमुद्देश्यवाचकपदप्रयोगः प्रागेव कर्तव्यः। अन्यथा नीलरूपवान् घट इत्यत्र घटोद्देश्यकरूपविधेयको बोधःस्यात्, किन्तु नीलरूपवदुद्देश्यकघटत्वबिधेयकबोध एव भवतीति। प्रकृतिविकृतिभावेऽप्येवं नियमोबोध्यः। यथा एको वृक्षः पञ्चनौका भवतीत्यत्र वृक्षपदं नौकारम्भकद्रव्यपरम्। तेन नौकारम्भद्रव्यं पञ्चनौकारम्भकद्रव्याभिन्नं भवतीति बोधः। एवमेकसुवर्णं दशकुण्डलानि भवतीत्यादावपि बोधः। यूपायदारू इत्यत्र दारूपदं दार्वारम्भकद्रव्यपरम्। चतुर्थ्या उद्देश्यत्वं मर्थः, जनकत्वं च। तेन यूपजनकदार्वारम्भकद्रव्यमितिबोधः। रन्धनाय स्थाली इत्यत्र प्रकृतिविकृतिभावेऽपि चतुर्थ्याः केवलमुद्देश्यत्वमर्थः। तेन रन्धनोद्देशकस्थालीयमिति बोधः इत्येवमेव तादर्थे चतुर्थी।

## अथोपसर्गबिचारः—

तत्रोपसर्गस्य वाचकत्वं नास्ति। किन्तु द्योतकत्वमेव। क्लृप्तशक्तिकधातोरेकार्थविशेषे तात्पर्यग्राहकत्वात्। प्रजयन्तीयत्र जिधातोरेव जयेशक्तिः। प्रकृष्टजये लक्षणा। उपसर्गस्य तात्पर्यग्राहकत्वम्। प्रकृष्टजयबोधः। अथवा जिधातोः प्रकृष्टजये शक्तिः। सा च प्रोपसंधानेनैव बोध्यते। तथा चात्र औपसंधानिकी शक्तिः। न च प्रतिष्ठत इत्यत्र प्रकृष्टस्थित्याश्रय इति बोधः कथं न जायते इति वाच्यम्। तत्रस्थितिविपरीतगमनार्थोपस्थितत्वात्। धातूनां प्रोपसंधानेनैव लक्षणया वा तादृशार्थो बोध्यते। अपि च प्रजयतीत्यत्र प्रकृष्टजये यदि धातोर्न शक्तिस्तदा प्रकृष्टजयाश्रयत्वेन बोधः (न)। प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तेः श्रवणादिति।

## अथ क्त्वाप्रत्ययविचारः—

तत्रानन्तर्यं एव तस्य शक्तिः। भुक्त्वा व्रजतीत्यत्र भोजनान्तरं व्रजनस्यानुभवसिद्धत्वात्। न च भोजनव्रजनयोः समानकालिकत्वम्।

व्रजनपूर्वकाले भोजनस्यैवावगाहनात्। समानकर्तृकत्वं तु आक्षेपलभ्यम्। न च झणकृत्य पतति, मुखं सम्मील्यहसति मुखं व्यादाय स्वपितीत्यादौ नेह स्वपनादीनां कथमानन्तर्यम्। पतनाद्यनन्तरमेव झण्काराद्युपलब्धेरितिवाच्यम्। झण्काराद्यनन्तरमपि पतनादीनां सत्वान्नकोऽपि दोष इति निष्कर्षः।

**अथ नञर्थकथनम्—**

तत्र नञः संसर्गान्योन्याभावौ। तत्रायं नियमः कथ्यते। यत्रविशेष्यविशेषणयोरभेदान्वयबोधस्तत्र अन्योन्याभावो नञाबोध्यते। यथाऽयं घटो नीलो नायं नीलघट इत्यत्र नीलघटयोरभेदोभासते इति अभावान्वये घटे नीलघटभेदो भासते। अतएव यजतिषु यजामह कुर्यान्नानुयाजेष्वित्यनुयाजभिन्नेषु यजतिष्वेवेति यजामहस्य कर्तव्यता भासते। यत्र तु प्रतियोग्यनुयोगिनो भावान्वयेभेदो भासते तत्र संसर्गाभावो नञाबोध्यते। यथा भूतले घटः, भूतले घटो नास्ति, पचति चैत्रः, न पचति चैत्रः, चैत्रस्येदम्, नेदं चैत्रस्य इत्यादौ भूतलाद्यनुयोगिनि घटवृत्तिसत्तानां भेदो भासते। तेन भूतलवृत्तिघटाभावः, पाकानुकूलकृत्यभाववान् चैत्रः, चैत्रसम्बन्धत्वाभाववदिदम्। इत्यादि बोध एव। अत्रापि विशेषः। यत्रानुयोगिनिनामार्थप्रतियोगिकसंसर्गाभावबोधः, तत्रावश्यम्, अनुयोगिपदे सप्तम्यपेक्षा कर्तव्या। अत्राभावद्वयेऽन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वं व्युत्पत्या भासते। नीलघट इति भूतले घटोनास्ति; एवं नीलोघटो न घट इत्यप्रतीतेः। पीतघटवति भूतले नीलघटो नास्ति। एवं पीतघटो न नीलघट इत्यादिप्रतीतेश्च।

एवं नञः कुत्रचित् प्रसज्यप्रतिषेधे शक्तिः, कुत्रचित् पर्युदासबोधकत्वम्। यथा एकादश्यां न भुञ्जीत इत्यत्र भोजनस्य रागत एकादश्यामपि प्रसक्तै तत्र प्रसज्यपतिषेधोबोध्यते। नहि एकादशीभिन्ने भुञ्जितेति पर्युदासविधिः। भोजनस्य केवलं रागप्राप्तत्वात् कथं पर्युदासविधिः। द्वितीयं यथा अथामावस्यायांश्राद्धं पितृभ्यो दद्यादिति सामान्यशास्त्रम्। तदनु रात्रौ न कुर्वीत, सन्ध्ययोरुभयो रपीति विशषेनिषेधस्तु पर्युदासविधिः कल्प्यते। तेन रात्रिसन्ध्येतरामावस्यायां पितृभ्यो दद्यादिति पर्युदासो लभ्यते। न तु निषेध-

विधित्वेन रात्रिसन्ध्याधिकरणकश्राद्धनिषेधोऽवगम्यते। सामान्यशब्दस्य रात्रिसन्ध्यांशेऽबाधापत्तेः। एवं न संगोत्रांभार्यां विन्देत इत्यत्र यदा च परिवेदनस्य शास्त्रतः प्राप्तिस्तदा पर्युदासविधिः। यदा तु रागतः प्राप्तिस्तदा प्रसज्यप्रतिषेध एवावगम्यते। केचित् अतिरात्रो षोडशिनं गृह्णीयान्नातिरात्रो षोडशिनमितिवत् अत्रापीच्छाविकल्प इति मन्यन्ते। तन्न। तत्र तुल्यबलत्वादत्रतु सामान्यविशेषभावेनातुल्यबलत्वात् इति निष्कर्षः।

अथावैधहिंसाविचारः—

मा हिंस्यात् सर्वाणि भूतानीति सामान्यं शास्त्रम्। वायव्यं श्वेतमालभेत इति विशेषशास्त्रम्। अतएव हिंसायां विधिनिषधयोरवस्थानेन विरोधात् सामान्यशास्त्रं विशेषशास्त्रेण बाध्यते। विरोधे हि बलीयसाऽल्पबलं बाध्यते। विशेषशास्त्रं तु बलीयोनिरवकाशत्वात्, सामान्यशास्त्रं त्वल्पबलं सावकाशात्। तेन सामान्यशास्त्रस्य वैधेतरविषयत्वं कल्प्यते। पदार्थान्तरसाकांक्षोविशेष इति न्यायात्। तथा च वैधेतरहिंसायाः एव नरकजनकत्वमिति कल्प्यते टीकाकृता। मिश्रमते तु सामान्यविशेषशास्त्रयोर्नविरोधोभिन्नविषयत्वात्। तथाहि मा हिंस्यादिति हिंसाया अनर्थहेतुतावाप्यते। विशेषशास्त्रे हिंसायां क्रतुप्रकारकत्वं बोध्यते। अतएव वैधेतरहिंसायामपि नरकजनकत्व कल्प्यम्। हिंसायाः क्रतुप्रकारकत्वम्। न तु साक्षात् स्वर्गजनकत्वम्। किन्तु क्रतोरेव स्वर्गजनकत्वम्। उत्तरविशेषविध्यभिधानादिति।

एवं यत्र सामान्येविधिर्निषेधोवा, तत्र सामान्यस्य विशेषपरत्वं कल्प्यते। पदार्थान्तरसाकांक्षं विशेषमपहाय तदितर एव सामान्यमन्वेतीति व्युत्पत्तेः। यथा ब्राह्मणाय दधि दातव्यम्। कौण्डिन्याय न दातव्यमित्यत्र ब्राह्मणसामान्यस्य कौण्डन्येतरपरत्वं भासते। प्रकृते तु ब्राह्मणसामान्यंदधिदाने साकांक्षम्। कौण्डिन्यस्तु तदभावे साकांक्ष इति सामान्ये तदितरपरत्वं कल्प्यते। एवं ब्राह्मणेभ्यो दधि दातव्यं तक्रं कौण्डिन्याय। यत्र दध्यपेक्षयापदार्थान्तरं तक्रमित्यतो ब्राह्मण सामान्यस्य तदितरपरत्वं भासते। तेन कौण्डिन्यस्य ब्राह्मणत्वपुरस्कारेण दधिदानं न प्रसज्यते। अत एवेयं व्युत्पत्तिः विधिनिषेधयोः

सामान्यविशेषविध्यनुज्ञाफलकत्वमिति। एवं मा हिंस्यात् सर्वाणि भूतानि, वायव्यं श्वेतमालभेत, इत्यत्रापि हिंसासामान्यं निषेधसाकांक्षं हिंसाविशेषस्तु विधौ साकांक्ष इत्यतो हिंसा-सामान्यस्य वैधेतरत्वेन वैधेतरहिंसैवानर्थहेतुरिति निष्कर्षः।

अथ पदशक्तिनिरूपणम्–

सा चास्माद् शब्दादयमर्थो बोधव्य इतीश्वरेच्छा। आधुनिकेसंकेते तु आधुनिकसंकेत एव शक्तिः। अथवा तत्रापीश्वरेच्छावर्त्तते। सर्वत्रैव ईश्वरेच्छाविशेष एव शक्तिरिति निष्कर्षः। सा च जातिविशिष्टे कल्प्यते। विशिष्टस्यानुरोधात्। तत्र जातेः प्रकारतया, व्यक्तेः विशेष्यतया, वैशिष्ट्यस्य संसर्गतया पदेनोपस्थितिरिति नैयायिकाः। वैयाकरणमतेऽपि घटत्वविशिष्टे शक्तावपि घटत्वमपि तदर्थः। तेन जन्येनरूपेणज्ञाते भवति लक्षणेति संगच्छते। कस्यचिन्मते व्यक्तावेव-शक्तिः जातिरवच्छेदिका। व्यक्तेरननुगतत्वात्। जात्यवच्छेदेन व्यक्तौ शक्तिग्रहः। तद्रूपेणैव शक्तिग्रहे पदार्थोपस्थितिद्वारा शाब्दबोधादिति। मीमांसकास्तु जातावेव शक्तिः। लाघवात्। व्यक्त्यन्वयबोधस्तु जातौ शक्त्यनुभवादिति। अथाकारादिपञ्चाशद्वर्णानां प्रत्येकं कुत्रशक्तिः? न तावत्तेष्वेव। अभेदेनैव वाच्यवाचकभावाभावात्। किन्तु एकाक्षरकोशोक्त-वासुदेवादिष्वेव शक्तिरिति निष्कर्षः। यदा तु पदशक्तिः पदार्थे दृश्यते तदैव पदशक्त्या पदार्थानामनुभवः। तदनन्तरं शाब्दबोधकाले पदज्ञानं, शक्तिस्मरणतया पदार्थस्मरणम्। ततः शाब्द-बोध इति।

अथ शक्तिग्रह-निरूपणम्–

तत्रकारिका :—

"शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्यात् व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्यवृद्धाः॥"

तत्र क्रमेणोदाहरणम्। व्याकरणेन धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो जायते। यथा पाचक इति। गौरिव गवय इत्यत्र उपमानेन गवयपदस्य गोसादृश्यवति गवये शक्तिग्रहो भवति। कोषेण पर्याय-

नानार्थपदानां तत्तदर्थेषु शक्तिग्रहो भवति। पिकः कोकिल-पदवाच्यो भवतीत्याप्तवाक्येन कोकिलपदस्य पिके शक्तिग्रहो जायते। आप्तस्तु प्रकृतवाक्यार्थगोचर-यथार्थज्ञानवान्। षष्टचा तु दिवसै र्मासः कथितो बादरायणैरित्यत्र मासपदस्य षष्टिदिवसेऽपि शक्तिग्रहो जायते। व्यवहारेण यथा-प्रयोजकवृद्धेन घटमानय इत्युक्तम्। तत् श्रुत्वा प्रयोज्यवृद्धेन घट आनीतस्तदवधार्य पार्श्वस्थोबालो घटानयनरूपं कार्यं घटमानयेति शब्दप्रयोज्यमित्यवधारयति। तदनन्तरं पटमानयेति वाक्यात् पटानयनरूपं कार्यं पटमानयेति शब्दप्रयोज्यमित्यवधारयति। तदनन्तरं घटपदं घटे शक्तम्। पटपदं पटेशक्तम्। द्वितीयापदं कर्मतायाम्, आङ्पूर्वणीपदमानयने, हि पदं कृतौशक्तमिति विच्छिन्नशक्तिग्रहो व्यवहारेण जायते। वाक्यशेषेण यथा-यवमयश्चरुर्भवतीत्यत्र यदि यवस्य दीर्घशूकेआर्याणां प्रयोगः। कङ्गौ तु म्लेच्छानाम्। कङ्गुर्नाम धान्यविशेषः। वसन्ते सर्वशस्यानां जायते पत्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः इति वाक्यशेषात् दीर्घशूक एव शक्तिग्रहो जायते। कङ्गौ तु भ्रमात् म्लेच्छानां प्रयोगः। विवरणादपिः-विवरणं शब्दान्तरेण तदर्थकथनम्। घटो नास्ति इत्यस्य कलशोनास्ति इति विवरणेन घटपदस्य कलशे शक्तिग्रहो भवति। एवं सिद्धपदस्य सान्निध्यतोऽपिः-इह सहकारतरौ मधुरं पिको रौतीत्यत्र प्रसिद्धसहकारपदसान्निध्यात् पिकपदस्य कोकिलेशक्तिग्रहो जायते।

अथ शब्दविचारः-

सच द्विविधो वर्णात्मको ध्वन्यात्मकश्चेति। तत्र वर्णात्मकः साधुशब्दः। सोऽपि द्विविधः, वाचको लाक्षणिकश्चेति। वाचकोऽपि चतुर्विधः यौगिकः, रूढः, योगरूढः, यौगिकरूढश्चेति भेदात्। यत्र समुदायशक्तिनैरपेक्षेण अवयवशक्त्यैव पदार्थोपस्थितिः स एव यौगिकः। यथा-पाचकादि, पाककर्त्तृ-वपुरस्कारणोपस्थितिः। यत्रावयवनैरपेक्षेण समुदायशक्त्यैव पदार्थोपस्थितिः स एव रूढः। यथा-मण्डपादि देवगृहे रूढम्। मण्डपानकर्त्तरि मण्डपपदं लाक्षणिकम्। यत्र तु अवयवसापेक्षेण समुदायशक्त्या पदार्थोपस्थितिः स एव योगरूढः। यथाः-पंकजादिः। पङ्कजनिकर्तृत्वं पद्मत्वं च शक्यतावच्छेदकम्। यत्र तु केवलावयवशक्त्या कुमुदोपस्थितिः केवलसमुदायशक्त्या स्थलपद्मो-

पस्थितिर्वा तत्र पङ्कजपदं लाक्षणिकमेव। यत्र तु योगार्थरूढ्यर्थयोः युगपत्स्वतन्त्रेणोपस्थितिः स च यौगिकरूढः। यथा–उद्भिदादिः। तेन युगपदेवोभयशक्त्या उभयोपस्थापकत्वम्। उर्ध्वभेदनकर्तृत्व-रूपेणावयवशक्त्या तरूगुल्मादिः समुदायशक्त्या वृक्षविशेषश्च बोध्यते। स च वाचकश्चतुर्विधः–द्रव्यगुणजातिक्रियाभेदाद्, यथा–डित्थडवित्थादिपदं केवलं द्रव्यवाचकम्। नीलपदं केवलं गुणवाचकम्। घटपटादिकं जातिवाचकम्। अध्येता पाचकादिपदं क्रियावाचकम्।

### अथ चतुर्विधवाचकलक्षणम्

समुदायशक्तिनिरपेक्षावयवशक्तिमत्पदं यौगिकत्वम्। यथा पाचकादि। अवयवशक्तिनिरपेक्षसमुदायशक्तिमत्पदत्वं रूढत्वम्। यथा मण्डपादि। अवयवशक्तिसापेक्षसमुदायशक्तिमत्पदत्वं योगरूढ़त्वम्। यथा पंकजादि। स्वतन्त्रोभयशक्तिमत्पदत्वं यौगिकरूढ़त्वम्। यथा–उद्भिदादि उर्ध्वभेदनकर्तृवृक्षविशेषश्च स्वतन्त्रेण बोध्यते।

साक्षात् संकेतितं योऽर्थमभिधत्ते, स वाचकः। अस्यार्थः–संकेतितमर्थं यः साक्षाद् अभिधत्ते, अव्यवधानेनोपस्थापयति, स एव वाचकः। अस्माच्छब्दादयमर्थो बोद्धव्य इत्युपदेशनं संकेतः। तेन ईश्वरसंकेताधुनिकसंकेतयोः संग्रहः। ईश्वरसंकेतितो घटपटादिः, आधुनिकसंकेतितो चैत्रमैत्रादिः। लक्षणया योऽर्थ उपस्थाप्यते न तु साक्षादस्योपस्थितिः। स एव लाक्षणिकः। मुख्यार्थबाधादिसहकृतत्वात्। वृत्तिर्द्विविधा शक्तिर्लक्षणा चेति। तत्र शक्तिर्निरूपिता। अधुना लक्षणोच्यते। तथा च लक्षणावृत्तिमत्पदत्वं लाक्षणिकम्। सा च लक्षणा यथा–

मुख्यार्थबाधेतद्योगे रूढ़ितो वा प्रयोजनात्।
अन्यार्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिताक्रिया॥

अस्यार्थः—मुख्यार्थबोधतद्योगयोः सत्त्वे रूढ़िनिमित्तं प्रयोजननिमित्तं वा यत् यया वृत्त्याऽन्यार्थोलक्ष्यते उपस्थाप्यते, सैव वृत्तिर्लक्षणेति। सैवलक्षणा मुख्यार्थसंबन्धः। स च सम्बधो यदा पदस्यान्यपदार्थे गृहीतः, तदैव पदसम्बन्धात् पदार्थानामनुभवः। तदनन्तरं शाब्दबोधकाले पदश्रवणं तथा पदार्थस्मरणम्। ततः शाब्दबोधः। तेन

क्वचित् रूढ़िहेतुका, क्वचित् प्रयोजनहेतुकाऽऽरोपिता क्रिया लक्षणा। आरोपितशब्दव्यापारोलक्षणेति यावत्। तत्र रूढ़िहेतुका यथा- कर्मणि कुशल इत्यत्र मुख्यार्थस्य दर्भग्रहणादेरयोगे विवेचकत्वादौ च तत्सम्बन्धसत्वे कार्यनिपुणे लक्षणा। रूढ़ितः प्रसिद्धत्वात्। यत्र तु पदान्तरसमभिव्याहारं विना केवलकुशलपदं प्रयुज्यते, तत्रावयवशक्त्या कुशग्रहणकर्त्तरि शक्तमिति बोध्यम्। एवं देवपदसमभिव्याहारं विना यत्र तु मण्डपपदं प्रयुज्यते तत्रवाचनिकम्। प्रयोजनहेतुका यथा-गंगायां घोषः प्रतिवसतीत्यत्र मुख्यार्थस्यनिवासस्ययोगे सामीप्या- त्मकतत्सम्बन्धसत्वे तीरे लक्षणा। शैत्यपावनत्वादिहेतुः कल्प्यते। गंगातटे घोषः प्रतिवसतीत्यत्र तादृश प्रयोजनानवगते न लक्षणादरः क्रियते। यत्र तु प्रयोजनं च विना लक्षणा क्रियते तत्र गौणिलक्षणा। यथाऽग्निर्माणवकः। मञ्चाः क्रोशन्तीत्यत्रान्वयानुपपत्त्या मञ्चपदेन मञ्चस्थपुरुषे लक्षणा। कुन्ताः प्रविशन्तीत्यत्रान्वय-सत्वेऽपि तात्पर्या- नुपपत्त्या कुन्तपदेन कुन्तधरे लक्षणा इति प्राचीनाः। नव्यास्तु सर्वत्रता- त्पर्यानुपपत्तिरेव बीजमिति। पुनर्लक्षणा द्विविधा अजहत्स्वार्था जहत्स्वार्था चेति, काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदं दध्युपघात- कत्वेन काककुक्कुरादि-सर्वमुपस्थाप्यते काकपदेन। एवं गंगायां घोषः प्रतिवसतीत्यत्र जहत्स्वार्थैव। तेन गंगापदेन तीरमेवोपस्थाप्यते।

## अथ वीप्सा-विचारः-

तत्र वीप्सा व्यापकता। तद्विधाने द्विवचनं साधु। तत्र यद्पदस्य द्विरुक्तिस्तदर्थतावच्छेदकनिरूपितसमभिव्याहृतपदोपस्थाप्यपदार्थव्या- पकता बोध्यते। यथा-'गृहे गृहेऽश्वः', इत्यत्र गृहपदं गृहैकदेशपरम्। तेन गृहत्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम् अश्वे बोध्यते। एवं कृष्णपक्षेषु श्राद्धं कुर्यात् दिने दिने इत्यत्र दिनपदं तिथिपरम्। तेन तिथित्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं श्राद्धे भासते। एवमहरहः सन्ध्यामुपासीत इत्यत्राहःपदं सन्ध्यावन्दनाकालत्वपरम्। तथा च तत्कालोपाधिमत्निष्ठात्यन्ताभावाप्रतियोगित्वं सन्ध्यावन्दने भासते।

अथ शाब्दबोधान्तरम्—

आत्मनः पुत्रमिच्छतीत्याद्यर्थे सुप आत्मनः क्यजित्यादिना क्यच्-प्रत्ययः। तेन पुत्रीयति इति सिद्धम्। तेन पुत्रपदोत्तर क्यचिप्रत्ययस्यात्मसम्बन्धिपुत्रविषयणीच्छार्थः। आख्यातस्याश्रयत्वम्। तेनात्मसम्बन्धिपुत्रविषयकेच्छाश्रय इति बोधः। एवं भार्यायति, पयस्यति राजीयतीति सिद्धम्। अस्मिन्नर्थे काम्यच्प्रत्ययोऽपि साधुः। पुत्रकाम्यतीत्यादिप्रयोगः। आत्मसम्बन्धिपुत्रविषयककामनाश्रयत्वाश्रय इति बोधः। पुत्रमिवाचरति भृत्यमित्यत्रोपमानादाचारे क्यजिति क्यच् प्रत्ययः। पुत्रीयति भृत्यमिति सिद्धम्। आचार आचरणं व्यवहार इति यावत्। तेन भृत्यविषयकपुत्रतुल्यव्यवहारानुकूलकृत्याश्रय इति बोधः। एवं खर आत्मानमश्वमिवाचरति इत्यत्र सर्वप्रातिपदिकेभ्यः क्विपोलुगित्यनेन क्विप्प्रत्ययलोपः। तेनाश्वतीति प्रयोगः। तेनाश्वतल्यव्यापारानुकूलकृत्याश्रय इति बोधः। एवं प्रभवन्ति भृत्याः, रिपवन्ति मित्राण्यादि सिद्धम्। अधिकरणाच्चेत्याचारेऽपि क्यच्-प्रत्ययः। "प्रासादीयति यः कुट्याम्, पर्यङ्कीयति मञ्चके। तस्य सन्तोषशीलस्य कुरूपाप्यप्सरायते।" तेन कुटिविषयकप्रासादाधिकरणकव्यवहारानुकूलकृत्याश्रय इति बोधः। वृद्धः शिशुरिवाचरति इत्यर्थो कर्त्तुः क्यङ्सलोपश्चेति क्यङ्प्रत्ययः। तेन शिशूयते वृद्ध इत्यत्र शिशुतुल्यव्यवहारानुकूलकृत्याश्रय इति बोधः। एवमेरण्डोऽपि द्रुमायते। काकोऽपि गरूडायत इत्यादि सिद्धम्।

अथैकत्वादिपरार्द्धपर्यन्तसंख्याविचारः—

एकं दशं शतं चैव सहस्रमयुतं तथा,
लक्षं च नियुतं चैव कोटिरर्वुद एव च।
वृन्दं खर्वो निखर्वश्च शंखपद्मौ च सागरः।
अन्त्यं मध्यं परार्द्धं च दशवृद्धया यथोत्तरम्।

तत्रैकादशाद्यष्टादशान्तसंख्याशब्दा विशिष्ट एव शक्ताः। केवलसंख्योपस्थितिर्लक्षणयैवेति बोध्यम्। उनविंशत्तिर्ब्राह्मणाः। ब्राह्मणानामुनविंशतिरितिबोध्यम्। एषामेकवचनं सर्वत्रैव। यत्र तु एकादिपदगतद्वित्वबहुत्वं तात्पर्यविषयं तत्र द्विवचनादिकमपि प्रयोज्यम्। एवमे-

कादिचतुरन्ताः शब्दा वाच्यलिङ्गतयात्रिलिङ्गकाः। एवमेको ब्राह्मण इत्यत्र जातिपुरस्कारेण ब्राह्मणमात्रोपस्थितौ एकपदं तत्र सार्थकम्। द्वौ ब्राह्मणावित्यत्र द्विपदं द्रुततरबोधाय सार्थकम्। त्रयो ब्राह्मणाश्च-त्वारो ब्राह्मणा इत्यादौ बहुवचनेन बहुत्वावच्छिन्नब्राह्मणोपस्थितौ त्र्यादीनां व्यावर्तकतया सार्थकत्वमेवेति निष्कर्षः।

आलोच्य विविधं ग्रन्थं विचार्य च पुनः पुनः।
कृतेयं जयकृष्णेन शब्दार्थसारमञ्जरी॥

इतिश्री जयकृष्णभट्टाचार्यविरचितशब्दार्थसारमञ्जरी समाप्ता।